लभेत यदि वेतनं सुरभिदुग्धदोहाज्जनः
स काममुपनीयते[1] जननि तेन नैवेतरः ॥ १६ ॥

समस्तेति । हे जननि ! यः पुमान् तव समस्तगुणावधेः सकलगुणनिधेः अमृतकल्पसूक्तेः सुधामधुरस्य अस्य स्तवस्य परिशीलनात् पठनादिना प्रार्थितं फलमुपैति स तेन परिशीलनकर्मणा इतरं कामं नैवोपनीयते न प्राप्यते(?) इति काकुः, तर्हि प्राप्यतएव । अत्र दृष्टान्तः । जनः दोहनकर्मणि वेतनादिना नियुक्तः सुरभिदुग्धदोहनाद्वेतनं भृतिं यदि लभेत तावता सः इतरं कामं नोपनीयते इति न अपि तु सर्वान्कामानवाप्नुयादिति भावः(?) । अत्र वर्ण्याऽवर्ण्यानां धर्मैक्येन दीपकमलंकारः । पृथ्वी० ॥ १६ ॥

साऽऽनन्दं ये सरसमनसः स्वादु लक्ष्मीसहस्रं
जेगीयन्ते जगति जनितश्रीनिवासप्रसादम् ।
शान्तत्रासां विततिममितां शर्मणां निर्मिमाणा
तेषामेषा विहरतितरामिन्दिरा मन्दिरेषु ॥ १७ ॥

सानन्दमिति । सरसं सप्रीतिकं मनो येषां ते ये पुमांसः जनित उत्पन्नः श्रीनिवासस्य प्रसादो यस्मात्तत् स्वादु मधुरं

---

मधेनुक्षीरदोहिन आप्तकामतया वेतनं प्राप्तव्यं यथा न भवति तथैतत्स्तोत्रपाठकस्याऽऽप्तव्य फलं नाऽवशिष्यते इति स्तोत्रपाठफलमाह ।

१७ हे मातः ! रसिकान्तरङ्गा ये उत्पादितनारायणप्रीति मधुरं लक्ष्मीसहस्राख्यमेतत् स्तोत्रं सहर्षं जगति जेगीयन्ते (पुनः पुनर्गायन्ति ) तेषां गृहेषु अपगतिभीति सुखसन्तति कुर्वन्ती एषा लक्ष्मीरत्यन्तं क्रीडते इति पुनरेतत्स्तोत्रपाठफलमाह ।

१ उपनीयते इति १ पु० पा० ।

लक्ष्मीसहस्रं जगति भुवि जेगीयन्ते ऽभीक्ष्णं गायन्ति तेषां मन्दिरेषु गृहेषु शान्तः त्रासो यस्याः ताम् अमितां बव्हीं शर्मणां कल्याणानां विततिं विस्तारं तिर्मिमाणैषा मत्स्तुत्यमाना(?) मद्दुद्दिश्या इन्दिरा लक्ष्मीर्विहरातितराम् । अत्यन्तं क्रीडतीत्यर्थः । मन्दाक्रान्ता० ॥ १७ ॥

पौत्रेणाऽऽत्रेयगोत्राभरणनयचणश्रीनिवासाऽध्वरीन्दोः
श्रीमद्रामाङ्घ्रिभक्तिप्रमुदितरघुनाथार्ययज्वाऽऽत्मजेन ।
वेदान्ताचार्यपादाम्बुजनिहितहृदा वेङ्कटाऽऽर्येण क्लृप्तं
रम्यं लक्ष्मीसहस्रं पठत दृढतरं नित्यकल्याणकामाः ॥ १८ ॥

इति श्रीमत्काञ्चीनगरनायकताताचार्यभागिनेयवाजपेय-
सर्वपृष्ठाऽप्तोर्यामादियाज्यात्रेयवंशमौक्तिकीभवदप्पय्या-
चार्यतनूभवस्य श्लेषयमकचक्रवर्तिनो रघुनाथाचा-
र्ययज्वनः पुत्रेण वेङ्कटाचार्येण विरचिते श्री-
मल्लक्ष्मीसहस्रे फलस्तबकः पञ्चविंशो ग्र-
न्थश्च सम्पूर्णतामगमत् ॥ २५ ॥

पौत्रेणेति । हे नित्यं कल्याणे कामो येषां तत्सम्बुद्धौ, हे नराः! आत्रेयगोत्रस्य आभरणभूतश्चाऽसौ नयचणो न्यायवित्,-

---

१८ हे सुस्थिरक्षेमेप्सवः ! आत्रेयगोत्राऽलङ्कारनीतिज्ञश्रीनिवासाध्वरिनप्त्रा, रघुनाथपदभक्तिसंतुष्टरघुनाथाचार्ययज्वसुतेन वेदान्ताचार्य( वेङ्कटनाथनामकनिजगुरु )चरणसरोजासक्तमानसेन वेङ्कटाचार्येण रचितं मनोहरमिदं लक्ष्मीसहस्रं साऽऽग्रहं पठतेति निजवंशोत्कीर्तनपुरःसरमुपदिशन् स्तबकं स्तोत्रं चोपसंहरति ।

स्तेन विज इति चणप् । श्रीनिवासमंज्ञकः अध्वरीन्दुर्यायजूक-राज।(?)नस्य पौत्रेण नप्त्रा, पुनः श्रीमद्रामाङ्घ्रिभक्त्या प्रमुदितो यो-रघुनाथाख्य आर्यपज्वा श्रेष्ठयायजूकस्तस्याऽऽत्मजेन पुत्रेण, पुन-र्वेदान्ताऽऽचार्याणां रामानुजमतप्रवर्तकलक्ष्मणाचार्याणां यद्वा स्वस्य कवेर्वेदान्ताऽध्यापकवेङ्कटाऽऽचार्याणां पादाम्बुजं निहितं हृन्मनो येन तेन वेङ्कटार्येण वेङ्कटाऽध्वरिकविना क्लृप्तं निर्मितं रम्यं मनोहरम् इदं श्रीमल्लक्ष्मीसहस्रं दृढतरं श्रद्धाभक्तिसमन्विता-ऽर्थानुसन्धानसहितमित्यर्थः । पठत परिशीलयत, तेन च भजत सर्वमपि मङ्गलमिति शिवम् । स्रग्धरावृत्तम् ॥ १८ ॥

श्रीकृष्णात्रिकुलोद्भवः शिवमहीपालस्य यः सद्गुरु-
र्देवोपाहृयवान् यजुःश्रुतिधरः सिद्धेश्वरो योगिराट् ।
रामस्तत्तनयः समस्तविबुधैः काश्यां कृताग्र्यार्चनः
कृष्णस्तस्य सुतः कलासु कुशलस्तस्याऽप्यभूदात्मजः॥१॥
यः श्रीरामपदाम्बुजद्वयरसाऽऽस्वादैकलोलम्बको
वेदव्याकृतिकाव्यनाटककरा(?)लङ्काररत्नाकरः ।
यावद्बुद्धिबलोदयं विवृतवान् स श्रीनिवासः कविः
स्तोत्रं वेङ्कटयज्वनिर्मितमिदं लक्ष्मीसहस्राऽभिधम् ॥२॥
अनेकार्था एकपदाद्बुद्ध्या संशोध्य यत्नतः ।
अस्माभिष्कासिता देवैः रत्नानीव यथाऽम्बुधेः ॥ ३ ॥
स्वस्तिश्रीनृपशालिवाहनशके ऽभ्यष्टाऽद्रिधात्रीमिते
वर्षे दुन्दुभिसंज्ञके हरितिथौ मार्गाऽऽद्यपक्षे गुरौ ।
टीकेयं करवीरनामनगरे लक्ष्मीसहस्रस्तुते-
र्नीता ऽन्तं रघुवीरसुन्दरपदद्वन्द्वारविन्दे ऽर्पिता ॥ ४ ॥
मूलग्रन्थान्तराभावादज्ञानाद्भ्रान्तितो ऽपि वा ।
यदत्राऽसमञ्जसं तन्मे शोधनीयं महत्तमैः ॥ ५ ॥

सुकृतमत्राऽस्ति यत्मायस्तद्गुरोरेव मे न हि ।
दुरुक्तमस्ति चेत्किञ्चित्तन्ममैव गुरो र्न हि ॥ ६ ॥
विद्वांसो यदि मे दोषान् गुणान् वा कथयन्तु तत् ।
तुल्यं मनो मे मनुते श्लोक्तिः कष्टदा भवेत् ॥ ७ ॥
इष्वासमार्गणविभूषितपाणिकञ्जात्
साऽम्भस्तडिज्जलधरोपमनीलदेहात् ।
आजानुबाहुयुगुलाद्रविवंशदीपाद्
रामात्परं किमपि तत्त्वमहं न जाने ॥ ८ ॥

इति श्रीरावजीमहाराजाऽपरनाम्ना श्रीनिवासपण्डितेन विरचितायां बालबोधिन्याख्यायां श्रीमल्लक्ष्मीसहस्रटीकायां फलस्तबकः पञ्चविंशो ग्रन्थश्च सम्पूर्णतां पफाणतमाम् ॥ २५ ॥

---

दहनगुहाऽऽननन्देन्दु( १९६३ )मिते भूपस्य विक्रमस्याब्दे ।
संक्षिप्य वृत्तिरेषा रचिता फाल्गुनी हरिप्रियाप्रीत्यै ॥ १ ॥
साग्रं विलोक्य सम्यग् विचार्य मत्या ऽवधूतमत्सरया ॥ २ ॥
प्राचीननव्यवृत्त्योस्तरतमभावं विदन्तु विद्वांसः ॥ ३ ॥
गौतमगोत्रधुरन्धरनृसिंहसूरेः सुतो विनीतात्मा ।
तैलङ्गरामशास्त्री कृत्वेमां वृत्तिमार्पयल्लक्ष्म्यै ॥ ४ ॥

इति श्रीमानवल्ल्युपाह्वतैलङ्गरामशास्त्रिविरचितायां लक्ष्मीसहस्रव्याख्यायां निःश्रेणिकायां फलस्तबको ग्रन्थश्च सम्पूर्णः ।